## अविज्ञातकविकर्तृकः

# क्रियानिघण्टुः




विद्वान् उमाकान्तभट्टः

-१२३-

अविज्ञातकविकर्तृकः

# क्रियानिघण्टुः

सम्पादकः

**विद्वान् उमाकान्तभट्टः** एम्. ए.

प्राचीनन्यायपण्डितः

श्रीवेदवेदान्तबोधिनी संस्कृतमहापाठशाला
मेलुकोटे

KRIYANIGHANTU - A Collection of Sanskrit verbs
Edited by : Vidwan Umakant Bhat, Melukote.

Pages : vi + 42

First Edition : 2000

**Price : Rs. 7-00**

Published by : Shatamanotsava Datti
Vedavedantabodhini
Samskrita Mahapathashala
Melukote

Printed by : S. Chandrashaker
For Chaaritra Printers, Mysore-4

## पूर्ववाक्

गैर्वाण्या वाण्याः कोशनिर्माणपरम्परा त्वनितरसाधारणी गण्यते। यतो हि सा चिरात्प्रागेव प्रवर्तमाना हलायुधवैजयन्त्यमरादिनामनिघण्टुभिः आख्यातचन्द्रिकाकविरहस्यक्रियाकलापप्रभृतिभिः क्रियाकोशैश्च समृद्धा, गच्छता कालेन समेधमाना च समस्ति। संस्कृतस्य नामक्रियानिघण्टूनामयं नामाख्यातानां भूयसां सङ्ग्रहेण साकमतिशयितो विशेषो यदेते छन्दोबन्धबन्धुराः सुलभावधारणाः भवन्ति। इह स्मर्यते च दैवस्य पुरुषकारः, -

**न विना वृत्तबन्धेन वस्तु प्रायेण सुग्रहम्।** इति।

तदिमे सुवृत्तग्रथिताः कोशाः संस्कृतमधीयानैराशैशवादेव कण्ठे स्थापिताः व्यवहारायतौ नितान्तमुपयुक्ताः महोपकाराय कल्पन्ते इति विदितमेव समेषाम्। सद्यः सन्ति नामलिङ्गाद्यनुशासननिरताः कोशाः ज्यायस्या संख्यया हस्तसात् क्रियमाणाः। किन्तु आख्यातपर्यायनिचायकाः कोशाः कतिपय एव अङ्गुलिमेयाः समुपलभ्यन्ते। तेषु भट्टमल्लस्य आख्यातचन्द्रिका, विद्यानन्दस्य क्रियाकलापः, वीरपाण्ड्यस्य क्रियापर्यायदीपिका, गुणरत्नसूरेः क्रियारत्नसमुच्चयः, हलायुधस्य कविरहस्यम् विशिष्य नामोल्लेखमर्हन्ति। येषां भट्टमल्लीयाख्यातचन्द्रिका सर्वानितरानतिशेतेतराम् काण्डवर्गादिविभागपूर्वकक्रियापर्यायसञ्चयनात्।

इहाधुना देवनागर्या सम्मुद्र्य प्राकाश्यं नीयमानोऽसौक्रियाकोशः केन कतरद्देशमलङ्कुर्वता च कविना निर्मित इति नैतावता विद्मः। बहोः कालात्पूर्वम् बालविज्ञानदीपिकाख्ये आन्ध्राक्षरमुद्रिते ग्रन्थे यद्यप्यसौ घटकः, अथापि सद्यो दुष्प्रापः। अतः लघीयसः अस्याख्यातनिघण्टोः छात्रोपकारप्रवणतामालक्ष्य देवनागर्या

मुद्रापणप्रकटनयोः विहितप्रयत्नो दत्तावधानश्चाहम्। उपलब्धैक-तालपत्रावलम्बिनि तादात्विकमुद्रितकोशे तत्र तत्र दृष्टिपथमायाता अशुद्धीर्वारयितुं यथाशक्ति यथामति प्रायतिषि। विद्यार्थिना-मानुकूल्यं वर्धयितुं प्रबन्धान्ते अर्थाधिकारपर्यायसंख्याप्रदर्शनीम्, क्रियापदपरिच्छेदिकां च तालिकां सन्न्यवीविशम्। एतेन संस्कृतभाषामधीत्य तया व्यवजिहीर्षवः कुमारमतयो विद्यार्थिनः भृशमुपकरिष्यन्त इति दृढं विश्वसिमि। सदवसरेऽस्मिन् **संस्कृतवर्षस्य,** लघीयोग्रन्थमेतं प्रकाशयितुं शताब्द्युत्सवदत्तितः प्रोत्साहधनं दत्त्वा बहूपकृतवन्तः श्रीवेदवेदान्तबोधिसंस्कृतमहापाठशालायाः प्रांशुपालाः सुकविविद्वांसः **अरैयर् श्रीरामशर्माणः** शतं नमस्यन्ते। आमूलचूल-मिममनालस्येन परिशील्य परिशोध्य च मुखवाणीतोऽनुगृहीतवन्तः विद्वांसः **सो ति नागराजा** मे प्रणामभाजः। क्रियापद-परिच्छेदिकायाः सज्जीकारे साहाय्यकमाचरन् मित्रं **गजाननो रावतः** अभिनन्दनमर्हति।

मेलुकोटे प्रमाथिमकरसङ्क्रमणम् १५-१-२०००

एवं निवेदकः
***वैश्वामित्र उमाकान्तभट्टः***

# मुखवाणी

अविज्ञातकविसन्दृब्धः **क्रियानिघण्टुः** सपरिष्कारं एतर्हि प्रकाशपथं नीयत इति गीर्वाणवाणीपरिषेवणप्रवणानां प्रमोदस्थानम्।

सुग्रहपद्यगुम्फितानां कोशानां निर्मितिर्ग्रन्थस्थविषयाननु-सन्धित्सूनामुपकाराय महते। प्रक्रियाजालजटिलितानां क्रियापदा-नामेकत्र सङ्ग्रहस्तु मालीभूयालङ्कुर्यदिव प्रयोक्तृकण्ठम्।

सुग्रहेऽस्मिन् सङ्ग्रहे कविः पर्यायतामधिगतानि क्रियापदानि लटि समग्रहीत्। अन्ते क्रियापदसङ्ग्राहिका अपि कारिकाः काश्चिन्न्यभान्त्सीत्। विकरणपर्यायतामभ्यस्तसंज्ञामपि निरदिक्षत्। एवञ्च, मल्लग्रामादिवत् पर्यायक्रियापदसङ्कलनमेतदिति निर्देशमर्हति।

अमरसिंहीयं पन्थानमनुरुन्धानः कविस्त्वन्ताथादिपरिभाषां परिपालयन्नपि चकास्तिपर्याये 'रोचते' इत्यर्थान्तरेऽपि प्रसिद्धं निवेशयन्नर्थसाङ्कर्यकरणान्न मुक्तः।

गोपायत्यभिगोपायत्योः पर्यायतानिर्देशो न क्षोदक्षमः। उपसर्गविशेषयोगेऽपि रूपान्तराभावात्।

सत्यपि क्रियैक्ये तक्ष्णोति-द्यति इत्यनयोर्न पर्यायता। तनूकरणं तक्ष्णोतेः, विदलनमात्रञ्च द्यतेरर्थः।

सौति-सूते इत्यादादिकयोः पर्यायता प्रदर्शनं सौतेः प्रसवः

इत्यर्थनिर्देशस्यान्यथाग्रहणात्। प्रसवोऽभ्यनुज्ञानमित्यनुजानाति-पर्यायः सौतिः। देवस्य त्वा सवितुः प्रसवे इति श्रुतेश्च।

सङ्ख्याति-गणयत्योरव्यवहितनिर्देशोऽभविष्यच्चेच्छोभिष्यत। मिनोतेः प्रवेशः सङ्करकरः।

सत्यप्येवं, क्रियापदानां यौगपद्येनानुसन्धानाय, प्रयोक्तृसौलभ्याय चायं सङ्ग्रहो नितरामुपकरोतीत्यत्र न विमतिः।

सुहृद्वराः न्यायशास्त्रविद्वांसः श्री उमाकान्तभट्टाः ग्रन्थान्ते अर्थाधिकारक्रियापर्यायसङ्ख्यां, क्रियापदपरिच्छेदिकाञ्च संयोज्य कोशमेतमभूषयन्। सुरवाणीप्रणयिनां धन्यवादानर्हन्ति ते।

सुरभारतीसमुपासकाः कोशमेतं साधूपयुञ्जतामित्याशास्ते।

*विद्वान्, सो ति नागराजः*
व्याकरणशास्त्राध्यापकः
श्रीचामराजेन्द्रसंस्कृतमहाविद्यालयः
बेङ्गलूरु-१७

प्रमाथिवत्सरीय-
पौषस्य अमावास्या
महोदयः पुण्यकालः

५-२-२०००

श्रीरस्तु

# अविज्ञातकविसन्दृब्धः क्रियानिघण्टुः

भवत्यर्थे भवत्यस्ति जायते विद्यते तथा।
सम्पद्यते निष्पतति निष्पद्यत उदञ्चति ॥ १ ॥
उत्पद्यतेऽप्युदयत उदेत्युदयतीति च।
[1]अङ्कुरत्यङ्कुरति चोद्भिद्यते कन्दलत्यपि ॥ २ ॥
एधते वर्धते नन्दत्यप्युत्तिष्ठत ऋध्यति।
भासते शोभते भाति लसतीन्धे प्रकाशते ॥ ३ ॥
राजते द्योतते राजत्यपि दीव्यति दीप्यते।
चकास्ति कसति भ्राजते च स्फुरति रोचते ॥ ४ ॥
ब्रवीति वक्ति वदति भणत्याख्याति शंसति।
आचष्टे [2]वष्टि गदति ब्रूते लपति भाषते ॥ ५ ॥

---

बिभ्राणा लोकमर्यादां माता मे हृदि सर्वदा।
प्रसन्नवर्णभूषाढ्या सन्निधत्तां सरस्वती।
अनिर्ज्ञातकविसन्दृब्धक्रियाकोशप्रकाशनीम्।
*प्रयोजनवती* नाम लघुवृत्तिं तनोम्यहम् ॥
क्रियारूपे यदि क्वापि संशीतिर्जायते पुनः।
तत्रैव टिप्पनीरूपां विवृतिं विदधाम्यहम् ॥

[1] अङ्कुरतीति - अङ्कुरशब्दादाचारार्थे क्विपि रूपं सिध्यति। अङ्कुर इवाचरति अङ्कुरति इत्यर्थः। एवमेव अङ्कुरति कन्दलति इत्यादावपि प्रक्रिया बोध्या।

[2] वष्टि - इच्छतीत्यर्थः। अस्येह कथनाधिकारे पाठः चिन्त्यः।

व्याहरत्यभिधत्तेऽभिदधातीरयतीत्यपि।
उच्चारयत्यामनति कथयत्याह जल्पति ॥ ६ ॥
ईट्टे वर्णयति स्तौति स्तुते नौति प्रशंसति।
वन्दते श्लाघते चापि कीर्तययत्यभिनन्दति ॥ ७ ॥
उपश्लोकयतीत्यर्थे पणायति पनायति।
व्याख्याति विवृणोति व्याकुरुते[1]ऽर्थापयत्यपि ॥ ८ ॥
विवृणीते विवृणुते व्याचष्टे व्याकरोति च।
प्रबध्नाति प्रणयति प्रयुङ्क्ते व्याकरोति च ॥ ९ ॥
पूजयत्यर्चयति सत्करोत्याद्रियतेऽञ्चति।
सम्भावयत्यर्चति सत्कुरुते मानयत्यपि ॥ १० ॥
सभाजयत्युपचरत्यन्वास्ते महयत्यपि।
आराधयत्यनुसरत्याराध्यत्यभिराध्यति ॥ ११ ॥
शुश्रूषते परिचरत्युपास्ते वरिवस्यति।
पुरस्करोति च पुरस्कुरुते बहु मन्यते ॥ १२ ॥
बहूकरोति च बहु मनुते चार्हयत्यपि।
[2]नमस्करोति कुरुते जुषते च नमस्यति[3] ॥ १३ ॥

---

[1] अर्थापयति - अर्थमाचष्ट इत्यर्थे अर्थशब्दात् णिचि अर्थविदयोरप्यापुग्वक्तव्यः इति वार्तिकेण आपुगागमे च रूपम्।

[2] नमस्करोति - 'नमस्' इति प्रणामार्थकाव्ययस्य करोति, कुरुते इत्युभयत्रापि पूर्वतः समभिव्याहारः। तथा समुदायस्यैव नमतिपर्यायत्वात्।

[3] नमस्यति - पूजयतीत्यर्थः। नमोवरिवश्चित्रङः क्यच् इति सूत्रेण नमस्शब्दात् क्रियाविशेषे पूजायां क्यच्।



भजते भजति श्रयति श्रयते प्रणिपतति सेवते नमति।
अभिवादयते [1]पादौ गृह्णीते वन्दतेऽभिवादयति ॥ १४ ॥
अवति त्रायते पाति पालयत्यपि रक्षति।
शास्ति गोपायति भुनक्त्यभिगोपायतीति च ॥ १५ ॥
प्रीयते मोदते हृष्यत्यानन्दति च नन्दति।
निर्वृणोति च [2]निर्वाति [3]सुख्यत्यवति तुष्यति। ॥ १६ ॥
सुखयत्याह्लादयति प्रीणीते प्रीणयति सुखाकुरुते[4]।
आनन्दयति धिनोत्यामोदयति च हर्षयति च तोषयति ॥१७॥
दूयते व्यथते दुःख्यत्यपि शोचति सीदति।
खिद्यते क्लिश्यति श्राम्यत्यन्तस्तपति ताम्यति ॥ १८ ॥
ग्लायति म्लायति प्लुष्यत्यपि स्विद्यति शुष्यति ॥ १९ ॥
क्लिश्नाति क्लेशयति व्यथयति दुःखाकरोति शोचयति।
विह्वलयति च दुनोति व्याकुलयति विमनयति विषादयति ॥
घातयत्याहते हन्ति निवर्हयति सूदते।
हिनस्त्युज्ज्ञासयति संहरते सूदयत्यपि ॥ २१ ॥
कदर्थयति मथ्नाति कर्शयत्यपि बाधते।
पिनष्ट्युपद्रवति च पीडयत्यपि शास्ति च ॥ २२ ॥

---

[1] पादौ गृह्णीते - उभयपदसमुदाय एव अभिवादनार्थकः।

[2] निर्वाति - निरुपसर्गबलात् सर्वबन्धविमोकरूपसुखबोधकमिदम्।

[3] सुख्यति - सुखं अनुभवति।

[4] सुखाकुरुते-सुखशब्दात् कृञो योगे आनुलोम्येऽर्थे डाच्। अनुकूलाचरणेन आनंदयतीत्यर्थः।

निगृह्णीते निगृह्णाति ताडयत्यपि विध्यति।
तनूकरोति तक्ष्णोति क्रशयत्यपि च द्यति ॥ २३ ॥
आप्नोति लभते याति [1]गच्छत्ययति ऋच्छति।
प्रपद्यते जिहीतेऽञ्चत्यासादयति विन्दते ॥ २४ ॥
आसीदति व्रजत्येति चरत्यटति ढौकते।
व्याप्नोति सर्पति सरत्ययते मूर्च्छतीत्यपि ॥ २५ ॥
उपसर्पत्युपसरत्युपयात्युपगच्छति।
उपधावत्युपनयत्युपैत्युपतिष्ठते ॥ २६ ॥
अपसर्पत्युपसरत्युपयात्यपगच्छति।
अपैति व्ययति व्येति विगच्छत्यपवर्तते ॥ २७ ॥
आगच्छत्याव्रजत्यायात्यापतत्यासरत्यपि।
निर्गच्छति च निर्याति निस्सरत्युत्पतत्यपि ॥ २८ ॥
उद्गच्छत्युद्व्रजत्युद्यात्युत्तिष्ठत्युच्चलत्यपि।
अभिगच्छत्यभिपतत्यभियात्यभिधावति ॥ २९ ॥
अभिप्रार्दयते [2]चैवमभिषेणयतीति च।
अनुसर्पत्यनुपलत्यनूदेत्यनुवर्तते ॥ ३० ॥
अनुगच्छत्यनुसरत्यनुयात्यनुधावति।
अन्वेत्यनुद्रवत्यन्वागच्छत्यन्वयतीत्यपि ॥ ३१ ॥

---

[1] गच्छति - गत्यर्थकाः गच्छत्यादयः क्रियाजन्यसम्वन्धरूपप्राप्तिमपि वोधयन्तः पर्यायतः आप्नोतिसमानार्थकाः।

[2] अभिषेणयति-सेनया अभियाति।



विडम्बयत्यनुकरोत्युपमात्यनुकल्पते।
एतेऽनुविदधात्यर्थे तुलयत्यपि तादृशः ॥ ३२ ॥
ददाति ददते दत्ते दिशत्युपहरत्यपि।
विश्राणयत्यर्पयति वितरत्यावहत्यपि ॥ ३३ ॥
प्रयच्छति स्पर्शयति प्रतिपादयतीति च।
[1]पात्रत्रा कुरुते तत्सात्करोत्यतिसृजत्यपि ॥ ३४ ॥
[2]दास्या संयच्छते कामी ददात्युपकरोति च।
आदत्ते प्रतिगृह्णाति प्रतिगृह्णीत इत्यपि ॥ ३५ ॥
जहाति विसृजत्युज्झत्यपि त्यजति मुञ्चति।
मुञ्चते वर्जयति च तथा परिहरत्यपि ॥ ३६ ॥
खेलति क्रीडति परिक्रीडते विहरत्यपि।
सङ्क्रीडते विभ्रमति विनोदयति दीव्यति ॥ ३७ ॥
रमतेऽनुक्रीडते प्रेङ्खति त्वङ्गति रिङ्गति।
विभ्राम्यति ललत्येवमथो नटति नृत्यति ॥ ३८ ॥
वीरायते धर्षयते धर्षयति प्रतिहन्ति प्रगल्भते।
विक्रामति परिक्रामत्यथ दृप्यति माद्यति ॥ ३९ ॥
अथो जयत्यतिक्रामत्यतिशेतेऽतिरिच्यते।
अत्येत्यर्थे विजयते पराजयत इत्यपि ॥ ४० ॥

---

[1] पात्रत्रा करोति - देयं पात्राधीनं कुरुते इत्यर्थे देये त्रा च इति सूत्रेण कृञो योगे पात्रशब्दात् त्रा। पक्षे पात्रसात् करोति।

[2] दास्या संयच्छते - अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया। दास्यै कामुको रत्यर्थं प्रयच्छतीत्यर्थः।

युध्यते योधयति च बाहुभ्यान्तु नियुध्यते।
कुप्यति क्रुध्यति द्वेष्टि रुष्यतीर्ष्यत्यसूयति ॥ ४१ ॥
[1]सङ्घर्षयत्याह्वयति स्पर्धते स्पर्धयत्यपि।
सहते क्षमते क्षाम्यत्यपि शाम्यति मृष्यति ॥ ४२ ॥
प्रसीदत्यनुगृह्णाति दयते चानुकम्पते ॥ ४३ ॥
पश्यति निर्वर्णयति [2]प्रत्यक्षयतीक्षतेऽपरोक्षयति।
निध्यायति लोचयति च साक्षात्कुरुते [3]निशामयति ॥
लोकते लक्षयति चाप्यथ जानाति बुध्यते।
वेदोपलभतेऽवैति प्रत्येति प्रतिपद्यते॥ ४५ ॥
मनुते वेत्ति जानीतेऽवगच्छत्यधिगच्छति ॥ ४६ ॥
गृह्णाति मन्यते चाथ सन्दिग्धे विचिकित्सति।
[4]डोलायते च संशेते शङ्कते विमृशत्यतः ॥ ४७ ॥
ऊहते तर्कयत्यध्याहरत्यालोचयत्यपि।
मीमांसते विविङ्क्ते च विचारयति चाप्यथ ॥ ४८ ॥
निर्धारयति निगमयति निश्चिनुते निश्चिनोति निर्णयते।
निर्णयति निरूपयति च निर्लोडयते परिच्छिनत्यपि च ॥

---

[1] **सङ्घर्षयति** - सङ्घर्षं करोति।
[2] **प्रत्यक्षयति** - प्रत्यक्षं करोतीत्यर्थे प्रत्यक्षशब्दात् णिच्। एवं अपरोक्षयतीत्यत्रापि।
[3] **निशामयति**-'शमोऽदर्शने' इति घटाद्यन्तर्गणसूत्रेण दर्शनार्थे मित्त्वाभावात् न ह्रस्वः।
[4] **डोलायते** - डोलेव आचरतीत्यर्थे डोलाशब्दात् क्यङ्।



निमिषति मुकुलीभवति स्फुटति च सङ्कुचति
कुड्मलीभवति।
उन्मीलत्युन्मिषति ह्युच्छ्वसिति निमीलयति मिषति
हसति ॥ ५० ॥
उद्भिद्यते विकसति स्फुटीभवति दीर्यते।
करोति कुरुते निर्मात्याचरत्यनुतिष्ठति ॥ ५१ ॥
निर्मिमीते विधत्ते विदधाति रचयत्यपि।
कल्पयत्याकलयति तनोति तनुतेऽपि च ॥ ५२ ॥
[1]वैरायते विरुन्धे विरुणद्धि [2]कलहायते।
द्वेष्टि द्विष्टे विगृह्णाति विराध्यत्यपराध्यति ॥ ५३ ॥
जिघांसति विगृह्णीते द्रुह्यत्यपकरोति च।
अपिधत्ते चावृणुते स्थगयत्यपि चोर्णुते ॥ ५४ ॥
तिरस्करोति च तिरोधापयत्यपनिह्नुते।
व्यवधत्ते व्यवदधात्यपवारयतीति च ॥ ५५ ॥
ऊर्णोत्युर्णौति धुडयत्यन्तर्धापयतीति च।
अन्तर्धत्ते तिरोधत्ते लीयतेऽन्तर्दधाति च ॥ ५६ ॥
मुष्णाति चोरयति च हरत्यपहरत्यपि।
बलाद्गृह्णात्याच्छिनत्ति लुण्टयत्यथ घुष्यति ॥ ५७ ॥

---

[1] **वैरायते** - वैरं करोति इत्यर्थे वैरशब्दात् क्यङ्।
[2] **कलहायते** -कलहं करोति इत्यर्थे कलहशब्दात् क्यङ्।

[1]शब्दायते घोषयति रौति स्वनति कूजति।
सङ्क्रीडति ध्वनति च शिङ्क्ते नदति गुञ्जति ॥ ५८ ॥
रणति क्वणति क्रुञ्चत्यपि स्तनति गर्जति।
रसति क्रोशति रटत्यथाक्रन्दति रोदिति ॥ ५९ ॥
[2]बाष्पायते विलपति परिदेवयतीति च।
वेपते कम्पते चञ्चत्यपि लोलति वल्गति ॥ ६० ॥
डोलायते च चलति वलते वलतीति च।
धुनोति धुनुते धूनोत्यालोलयति धूनुते ॥ ६१ ॥
धुनाति कम्पयत्येवं धुवति व्यग्रयत्यपि।
चलयत्याकुलयति श्रन्थादिश्चालयत्यपि ॥ ६२ ॥
श्लिष्यत्यालिङ्गति परिष्वजतेऽप्युपगूहति।
[3]आलिङ्गते चापि परिरभते वेष्टयत्यपि ॥ ६३ ॥
निदधाति निधत्ते निक्षिपते निक्षिपत्यपि।
निवेशयति विन्यस्यत्यपि न्यस्यति चाप्यथ ॥ ६४ ॥
पाणौ गृह्णाति गृह्णीते विवहत्युपयच्छते।
परिगृह्णाति च परिणयत्यथ निषीदति ॥ ६५ ॥
तिष्ठत्यास्ते निविशते वसत्युपविशत्यपि।
वितिष्ठते तदध्यास्तेऽधितिष्ठत्युपतिष्ठते ॥ ६६ ॥

---

[1] शब्दायते - शब्दं करोतीत्यर्थे शब्दशब्दात् **शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे** इति सूत्रेण क्यङ्।
[2] **वाष्पायते** - वाष्पं उद्वमतीत्यर्थः।
[3] आलिङ्गते - इह आत्मनेपदप्रत्ययः चिन्त्यः।



वर्तते ध्रियते प्राणित्यपि श्वसिति जीवति।
नुदति प्रेरयति विक्षिपति क्षिपतेऽस्यति ॥ ६७ ॥
प्रहिणोति व्यादिशति नियुङ्क्ते चोदयत्यपि।
प्रेषयत्यपि युङ्क्ते विसृजति प्रेष्यतीति च ॥ ६८ ॥
बिभर्ति बिभृते धत्ते वहते धारयत्यपि।
दधाति वहतीत्यर्थे धरत्युद्वहतीत्यपि ॥ ६९ ॥
तिरस्करोत्यभिभवत्यवजानाति निन्दति।
धिक्करोति न्यक्कुरुते विगायत्यवगायति ॥ ७० ॥
जुगुप्सतेऽवमनुते गर्हयत्यवमन्यते।
बहिष्करोति परिभवत्याक्षिपति चाजति ॥ ७१ ॥
अवधीरयत्येवमवमानयतीति च।
वाञ्छतीच्छत्यभिलषत्यभिलष्यत्यपेक्षते ॥ ७२ ॥
काङ्क्षत्याद्रियते चाभिप्रैति स्पृहयतीहते।
आशास्तेऽर्थयते वष्टि लिप्सतेऽभीप्सतीति च ॥ ७३ ॥
काङ्क्षते चाभिसन्धत्तेऽनुरुन्धे चानुरुध्यते।
याचते याचतीत्यर्थे नाथत्यर्थयतेऽर्दति ॥ ७४ ॥
अपोऽवगाहते चोपस्पृशति स्नाति मज्जति।
तिम्यत्यार्द्रीभवत्यर्थे स्तिम्यतीत्यप्यथोक्षति ॥ ७५ ॥
स्नपयत्याप्लावयति मज्जयत्यपि सिञ्चति।
शक्नोति पारयति पर्याप्नोति प्रभवत्यपि ॥ ७६ ॥

ईष्टे प्रगल्भते चाथ पचते पचतीति च।
प्रवर्तते प्रक्रमते प्रस्तौत्यारभतेऽपि च ॥ ७७ ॥
उपक्रमत उद्युङ्क्ते चार्हत्युत्सहतेऽपि च।
ईहते चेष्टते चैव यतते च प्रयस्यति ॥ ७८ ॥
भुङ्क्तेऽभ्यवहरत्यश्नात्याचामात्यत्ति खादति।
रसयत्यास्वादयति भक्षयत्यपि चर्वति ॥ ७९ ॥
ग्रसते ग्रसतीत्यर्थे जक्षति प्रत्यवस्यति।
लेढि लीढेऽथ पिबति धयत्यास्वादतेऽपि च ॥ ८० ॥
अथो गिरत्युद्गिरति निगिरत्युद्वमत्यपि ॥ ८१ ॥
भूषयति परिष्कुरुतेऽल[1]ङ्कुरुतेऽलङ्करोति मण्डयति।
अपि वा परिष्करोत्यप्याकल्पयति प्रसाधयति ॥ ८२ ॥
सौति सूते च जनयत्युत्पादयति सूयते।
त्रपते लज्जते जिह्रेत्यपि सङ्कुचतीति च ॥ ८३ ॥
सङ्गच्छते युज्यते सम्पद्यते चोपपद्यते।
सन्तिष्ठते समाप्नोति पर्याप्नोति च पूर्यते ॥ ८४ ॥
छिनत्ति कृन्तति लुनात्यपि खण्डयति द्यति।
अथ व्यापद्यते प्रैति म्रियते च प्रमीयते ॥ ८५ ॥
सम्मन्यतेऽनुजानीतेऽनुजानात्यनुमन्यते।
[2]उररीकुरुते चाङ्गीकरोत्यभ्युपगच्छति ॥ ८६ ॥

---

[1] अलङ्करोति - भूषणार्थे अलमित्यव्यययोगः।
[2] उररीकरोति - अङ्गीकारार्थे उररीत्यव्ययसमभिव्याहारः।



शृणोति संशृणुत इत्यर्थे निशमयत्यपि।
आकर्णयत्यपि ततोऽवधत्ते धारयत्यपि ॥ ८७ ॥
अध्येति स्मरति ध्यायत्यपि चिन्तयतीति च।
प्रमाद्यति प्रस्मरति विस्मरत्यपि मुह्यति ॥ ८८ ॥
अधीते शीलयत्यभ्यस्यति शीलति शिक्षते।
अमी परिचिनोत्यर्थे घटतेऽपि च सिद्ध्यति ॥ ८९ ॥
पुष्णाति पोषयत्यर्थे वर्धयत्येधयत्यपि।
पवते पावयत्यर्थे पुनीते च पुनाति च ॥ ९० ॥
मार्ष्टि मार्जयते शुद्धीकुरुते शोधयत्यपि।
मार्जति क्षालयत्यर्थे निर्णेनेक्ति च धावति ॥ ९१ ॥
वृणोति वरयत्यर्थे वृणीते वृणुते वरम्।
क्रीणाति पणते विक्रीणीते व्यवहरत्यपि ॥ ९२ ॥
मिमीते माति संख्याति मिनोति गणयत्यपि।
सज्जत्यासज्जयत्यर्थे सन्नह्यति तु सज्जते ॥ ९३ ॥
स्रंसते च्यवते भ्रश्यत्यपि ध्वंसत इत्यपि।
गलत्यथो मृगयते मार्गति मार्गयत्यपि ॥ ९४ ॥
विचिनोत्यन्विष्यति चान्विच्छत्यनुसरत्यपि।
विनयत्यनुशास्त्यध्यापयत्यभ्यासयत्यपि ॥ ९५ ॥
शास्ति शिक्षयतीत्यर्थे लगत्यर्थे तु लीयते।
नयति प्रापयति सङ्क्रमयत्यर्पयत्यपि ॥ ९६ ॥

स्रवति द्रवति श्चोतत्यपि क्षरति वर्षति।
स्यन्दते स्कन्दति नदी वहति प्रवहत्यपि।
चर्चयत्यङ्गरागार्थे रूषयत्यपि लिम्पति ॥ ९८ ॥
न्यञ्चत्यधोयाति पतत्यधोगच्छति मज्जति।
अथ निर्भर्त्सयति [१]हुङ्कुरुते तर्जयत्यपि ॥ ९९ ॥
भस्मीकरोति दहति प्लवते तु तरत्यपि।
निषेधति निरुन्धे निरुणद्धि प्रतिषेधति ॥ १०० ॥
सम्भ्राम्यति क्षुभ्यति सम्भ्रमत्यपि च वेपते।
बिभेति त्रसति त्रस्यत्यारोहत्यधिरोहति ॥ १०१ ॥
अवरोहत्यवपतत्यन्तर्विशति गाहते।
रज्यते रज्यति स्निह्यत्यनुयुङ्क्ते तु पृच्छति ॥ १०२ ॥
प्रतिवक्त्युत्तरयति वाति वीजयतीत्यपि।
लिखत्यालिखतीत्यस्मिन्नर्थे कृषति कर्षति ॥ १०३ ॥
स्पृशति जिघ्रति चुम्बति लम्बते,
दशति वर्षति जीर्यति लङ्घते।
फलति शीर्यति दुष्यति जृम्भते,
शपति घुष्यति दृप्यति घूर्णते ॥ १०४ ॥
बध्नाति नह्यति च सन्ददात्याकलयत्यपि।
समाधत्तेऽनुनयति सान्त्वयत्युपयच्छति ॥ १०५ ॥

[१] हुङ् कुरुते - न्यक्कारे हुम् इत्यव्ययम्।



खनति क्रमते स्नौति पठत्यपि लुठत्यपि।
ज्वलति श्लथयत्यर्थे स्रंसयत्यथ हेषते ॥ १०६ ॥
कर्षयत्यास्फालयति सङ्घट्टयति सीव्यति।
वयति व्यञ्चते दोग्धि जुहोति जुषते तथा ॥ १०७ ॥
क्रीणाति जानाति पुनाति पुष्णा-
त्यश्नाति मुष्णाति लुनाति चैवम्।
क्लिश्नाति बध्नाति गृणाति मथ्ना-
त्यतश्च गृह्णाति तथा वृणीते ॥ १०८ ॥
क्रीणीते जानीते गृह्णीतेऽपि च पुनीते च।
विधुनीते चेति श्नाविकरणभेदा इमे ख्याताः ॥ १०९ ॥
रुणद्धि रुन्धे च भिनत्ति भिन्ते,
युनक्ति युङ्क्ते च भुनक्ति भुङ्क्ते।
व्यनक्त्युनत्त्येव च विद्विनक्ति,
पिनष्टि रिङ्क्ते च हिनस्त्यपीन्धे ॥ ११० ॥
जुहोति जिह्रेति जहाति दत्ते,
ददाति धत्ते च तथा जिहीते।
तथा बिभेतीत्यपि वा मिमीते,
बिभर्ति जागर्ति चकास्ति शास्ति ॥ १११ ॥
दीधीतेऽपि च वेवीते दरिद्राति च जक्षति।
एते ह्यभ्यस्तसंज्ञाः स्युः झोऽन्तादेशविवर्जिताः ॥ ११२ ॥

सुनोति सुनुते संशृणुते च विचिनोति च।
चिनुते वृणुते चैव शृणोति च वृणोति च ॥ ११३ ॥
धूनुते प्रहिणोतीति धुनुते च धुनोति च।
स्पृणोति च दुनोतीति मिनोति मिनुते तथा ॥ ११४ ॥
धूनोत्याप्नोति शक्नोति तक्ष्णोति च हिनोति च।
सुनोत्याद्या इमे तु श्नुविकरण्यभिधाः स्मृताः ॥ ११५ ॥

**शमनं ध्वननं मज्जनविकलम्**
**जृम्भणदम्भनरोदनहसनम्।**
**कुटिलोत्सुकते भ्रमणं यतनम्**
**क्षरणं जरणं शकनं ग्लानिः ॥**
**वृद्धिक्षयभयजीवितमरणम्**
**लज्जासत्तास्थितिजागरणम्।**
**शयनक्रीडारुचिदीप्त्यर्थम्**
**धातुगणं तमकर्मकमाहुः ॥**



# अर्थाधिकारक्रियापर्यायसंख्याप्रदर्शनी

| अर्थाधिकारः | पर्यायसंख्या | कारिकासंख्या |
|---|---|---|
| अङ्गीकारः | ३ | ८६ |
| अधिष्ठानम् | ४ | ६६ |
| अध्ययनम् | ६ | ८९ |
| अध्यापनम् | ६ | ९५-९६ |
| अनुवर्तनम् | १२ | ३०-३१ |
| अनुज्ञा | ४ | ८६ |
| अन्तर्धानम् | ४ | ५६ |
| अन्तःप्रवेशः | २ | १०२ |
| अपसरणम् | ९ | २७ |
| अभिगमनम् | ६ | २९-३० |
| अभिवादनम् | ४ | १४ |
| अवधानम् | २ | ८७ |
| अवरोहः | २ | ८७ |
| आगमनम् | ५ | २८ |
| आदानम् | ३ | ३५ |
| आरम्भः | ६ | ७७-७८ |
| आरोहः | ७ | ६३ |
| आलिङ्गनम् | ७ | ६३ |

## सङ्केताक्षरविवृतिः

अ - अदादिः कण्ड् - कण्ड्वादिः क्रया-क्र्यादिः

चु - चुरादिः जु - जुहोत्यादिः त-तनादिः

तु - तुदादिः दि - दिवादिः भ्वा - भ्वादिः

रु - रुधादिः स्वा - स्वादिः

आ - आत्मनेपदी उ - उभयपदी

प - परस्मैपदी

# क्रियापदपरिच्छेदिका

| क्रियापदम् | धातुपाठः | गणः | कर्मसम्बन्धः | पदम् | इड्योगः |
|---|---|---|---|---|---|
| अजति | अज गतिक्षेपणयोः | भ्वा | अक-सक | प | सेट् |
| अञ्चति | अञ्चु गतिपूजनयोः | भ्वा | सकर्मकः | प | सेट् |
| अटति | अट गतौ | भ्वा | सकर्मकः | प | सेट् |
| अत्ति | अद भक्षणे | अ | सकर्मकः | प | अनिट् |
| अधीते | इङ् अध्ययने नित्यमधिपूर्वः | अ | सकर्मकः | आ | अनिट् |
| अध्येति | इक्स्मरणे नित्यमधिपूर्वः | अ | सकर्मकः | प | अनिट् |
| अयति | इण् गतौ | भ्वा | सकर्मकः | पर | |
| अयते | अय गतौ | भ्वा | अकर्मकः | आ | सेट् |
| अर्चयति(ते) | अर्च पूजायाम् | चु | सकर्मकः | उ | सेट् |
| अर्थयते | अर्थ उपयाच्ञायाम् | चु | सकर्मकः | आ | सेट् |
| अर्दयति(ते) | अर्द हिंसायाम् | चु | सकर्मकः | उ | सेट् |
| अर्हति | अर्ह पूजायाम् | भ्वा | सकर्मकः | प | सेट् |
| अवति | अव रक्षणगत्यादिषु | भ्वा | सकर्मकः | प | सेट् |
| अश्नाति | अश भोजने | क्र्या | सकर्मकः | प | सेट् |
| असूयति | असू उपतापे | कण्ड् | अकर्मकः | प | |
| अस्ति | अस भुवि | अ | अकर्मकः | प | सेट् |
| अस्यति | असु क्षेपणे | दि | सकर्मकः | प | सेट् |
| आस्ते | आस उपवेशने | अ | अकर्मकः | आ | सेट् |
| आशास्ते | आङः शासु इच्छायाम् | अ | सकर्मकः | आ | सेट् |
| आप्नोति | आप्लृ व्याप्तौ | स्वा | सकर्मकः | प | अनिट् |
| (आ) मनति | म्ना अभ्यासे | भ्वा | सकर्मकः | प | अनिट् |



| | | | | | |
|---|---|---|---|---|---|
| इच्छति | इष इच्छायाम् | तु | सकर्मकः | प | सेट् |
| इन्धे | जिइन्धी दीप्तौ | रु | अकर्मकः | आ | सेट् |
| ईक्षते | ईक्ष दर्शने | भ्वा | सकर्मकः | आ | सेट् |
| ईट्टे | ईड स्तुतौ | अ | सकर्मकः | आ | सेट् |
| ईरयति (ते) | ईर क्षेपे | चु | सकर्मकः | उ | सेट् |
| ईर्ष्यति | ईर्ष्य ईर्ष्यायाम् | भ्वा | अकर्मकः | प | सेट् |
| ईष्टे | ईश ऐश्वर्ये | अ | अकर्मकः | आ | सेट् |
| ईहते | ईह चेष्टायाम् | भ्वा | अकर्मकः | आ | सेट् |
| ईष्यति | इष् गतौ | दि | सकर्मकः | प | सेट् |
| उक्षति | उक्ष सेचने | भ्वा | सकर्मकः | प | सेट् |
| उज्झति | उज्झ उत्सर्गे | तु | सकर्मकः | प | सेट् |
| उनत्ति | उन्दी क्लेदने | रु | सकर्मकः | प | सेट् |
| ऊर्णुति | ऊर्णुञ् आच्छादने | अ | सकर्मकः | उ | सेट् |
| ऊहते | ऊह वितर्के | भ्वा | सकर्मकः | आ | सेट् |
| ऋच्छति | ऋ गतिप्रापणयोः | भ्वा | सकर्मकः | प | अनिट् |
| ऋध्यति | ऋधु वृद्धौ | दि | अकर्मकः | प | सेट् |
| एति | इण् गतौ | अ | अकर्मकः | प | अनिट् |
| एधते | एध वृद्धौ | भ्वा | अकर्मकः | आ | सेट् |
| कथयति(ते) | कथ वाक्यप्रबन्धे | चु | सकर्मकः | उ | सेट् |
| कनति | कनी दीप्तिकान्तिगतिषु | भ्वा | अकर्मकः | प | सेट् |
| कम्पते | कपि चलने | भ्वा | अकर्मकः | आ | सेट् |
| करोति, कुरुते | डुकृञ् करणे | त | सकर्मकः | उ | अनिट् |
| कर्षति | कृष विलेखने | भ्वा | सक | प | अनिट् |
| (वि)कसति | कस गतौ | भ्वा | सकर्मकः | प | सेट् |

| | | | | | |
|---|---|---|---|---|---|
| कल्पते | कृपू सामर्थ्ये | भ्वा | अकर्मकः | आ | वेट् |
| काङ्क्षति | काक्षि काङ्क्षायाम् | भ्वा | सकर्मकः | प | सेट् |
| (प्र)काशते | काशृ दीप्तौ | भ्वा | अकर्मकः | आ | सेट् |
| कीर्तयति | कॄत संशब्दने | चु | सकर्मकः | प | सेट् |
| (सं)कुचति | कुच सङ्कोचने | तु | अकर्मकः | प | सेट् |
| कुब्जति | कुब्ज कौटिल्याल्पीभावयोः | भ्वा | अकर्मकः | प | सेट् |
| कुप्यति | कुप क्रोधे | दि | अकर्मकः | प | सेट् |
| कूजति | कूज अव्यक्ते शब्दे | भ्वा | अकर्मकः | प | सेट् |
| कृषति | कृष विलेखने | तु | सकर्मकः | उ | अनिट् |
| कृन्तति | कृती च्छेदने | तु | सकर्मकः | प | सेट् |
| क्राम्यति क्रामति, | क्रमु पादविक्षेपे | भ्वा | अकर्मकः | प | सेट् |
| क्रीडति | क्रीडृ विहारे | भ्वा | अकर्मकः | प | सेट् |
| क्रीणाति | डुक्रीञ् द्रव्यविनिमये | क्र्या | सकर्मकः | प | अनिट् |
| क्रुध्यति | क्रुध क्रोधे | दि | अकर्मकः | प | अनिट् |
| क्रोशति | क्रुश आह्वाने रोदने च | भ्वा | सक अक | प | अनिट् |
| क्लिश्नाति | क्लिशू विबाधने | क्र्या | सकर्मकः | प | सेट् |
| क्लिश्यते | क्लिश उपतापे | दि | अकर्मकः | आ | सेट् |
| क्वणति | क्वण शब्दार्थे | भ्वा | अकर्मकः | प | सेट् |
| क्षमते | क्षमूष् सहने | भ्वा | अकर्मकः | आ | वेट् |
| क्षरति | क्षर सञ्चलने | भ्वा | अकर्मकः | प | सेट् |
| क्षाम्यति | क्षमु सहने | दि | सकर्मकः | प | वेट् |
| क्षालयति(ते) | क्षल शौचकर्मणि | चु | सकर्मकः | उ | सेट् |
| क्षुभ्नाति | क्षुभ सञ्चलने | क्र्या | अकर्मकः | प | सेट् |
| क्षुभ्यति | क्षुभ सञ्चलने | दि | अकर्मकः | प | सेट् |



| | | | | | |
|---|---|---|---|---|---|
| क्षोभते | क्षुभ सञ्चलने | भ्वा | अकर्मकः | आ | सेट् |
| क्षिपति | क्षिप प्रेरणे | तु | सकर्मकः | उ | अनिट् |
| खण्डयति | खडि भेदने | चु | सकर्मकः | उ | सेट् |
| खादति | खादृ भक्षणे | भ्वा | सकर्मकः | प | सेट् |
| खिद्यते | खिद दैन्ये | दि | अकर्मकः | आ | अनिट् |
| खेलति | खेलृ चलने | भ्वा | सकर्मकः | प | सेट् |
| गच्छति | गम्लृ गतौ | भ्वा | सकर्मकः | प | अनिट् |
| गणयति(ते) | गण संख्याने | चु | सकर्मकः | उ | सेट् |
| गदति | गद व्यक्तायां वाचि | भ्वा | सकर्मकः | प | सेट् |
| गलति | गल अदने | भ्वा | सकर्मकः | प | सेट् |
| (प्र)गल्भते | गल्भ धार्ष्ट्ये | भ्वा | अकर्मकः | प | सेट् |
| गर्जयति | गर्ज शब्दे | चु | अकर्मकः | प | सेट् |
| गर्दयति(ते) | गर्द शब्दे | चु | अकर्मकः | प | सेट् |
| गाहते | गाहू विलोडने | भ्वा | सकर्मकः | आ | वेट् |
| गायति | गै शब्दे | भ्वा | सकर्मकः | प | अनिट् |
| गुञ्जति | गुजि अव्यक्ते शब्दे | भ्वा | अकर्मकः | प | सेट् |
| गृह्णाति, गृह्णीते | ग्रह उपादाने | क्र्या | सकर्मकः | उ | सेट् |
| गोपायति | गुपू रक्षणे | भ्वा | सकर्मकः | प | सेट् |
| ग्रसते | ग्रसु अदने | भ्वा | सकर्मकः | आ | सेट् |
| ग्लायति | ग्लै हर्षक्षये | भ्वा | अकर्मकः | प | अनिट् |
| घटते | घट चेष्टायाम् | भ्वा | अकर्मकः | आ | सेट् |
| घूर्णते | घूर्ण भ्रमणे | भ्वा | अकर्मकः | आ | सेट् |
| घोषयति(ते) | घुषिर् विशब्दने | चु | सकर्मकः | उ | सेट् |
| घोषति | घुषिर् (णिजभावाक्षे) | | | | |

| | | | | | |
|---|---|---|---|---|---|
| चकास्ति | चकासृ दीप्तौ | अ | अकर्मकः | प | सेट् |
| चञ्चति | चञ्चु गतौ | भ्वा | अकर्मकः | प | सेट् |
| चरति | चर गतिभक्षणयोः | भ्वा | सक।अक | प | सेट् |
| चर्चयति(ते) | चर्च अध्ययने | चु | सकर्मकः | उ | सेट् |
| चर्वति | चर्व अदने | भ्वा | सकर्मकः | प | सेट् |
| चलति | चल कम्पने | भ्वा | अकर्मकः | प | सेट् |
| चष्टे | चक्षिङ् व्यक्तायां वाचि | अ | सकर्मकः | आ | अनिट् |
| चालयति(ते) | चल भृतौ | चु | सकर्मकः | उ | सेट् |
| चिनोति | चिञ् चयने | स्वा | सकर्मकः | उ | अनिट् |
| चिन्तयति | चिति स्मृत्याम् | चु | सकर्मकः | उ | सेट् |
| चुम्बति | चुबि वक्त्रसंयोगे | भ्वा | अकर्मकः | प | सेट् |
| चेष्टते | चेष्ट चेष्टायाम् | भ्वा | अकर्मकः | आ | सेट् |
| चोदयति(ते) | चुद सञ्चोदने | चु | सकर्मकः | उ | सेट् |
| चोरयति(ते) | चुर स्तेये | चु | सकर्मकः | उ | सेट् |
| च्यवते | च्युङ् गतौ | भ्वा | अकर्मकः | आ | अनिट् |
| छिनत्ति, छिन्ते | छिदिर् द्वैधीकरणे | रु | सकर्मकः | उ | अनिट् |
| (उत्)जासयति | जसु हिंसायाम् | चु | सकर्मकः | उ | सेट् |
| जक्षति | जक्ष भक्षहसनयोः | अ | सकर्मकः | प | सेट् |
| जयति | जि जये | भ्वा | अकर्मकः | प | अनिट् |
| जल्पति | जल्प व्यक्तायां वाचि | भ्वा | सकर्मकः | प | सेट् |
| जहाति | ओहाक् त्यागे | जु | सकर्मकः | प | अनिट् |
| जागर्ति | जागृनिद्राक्षये | अ | अकर्मकः | प | सेट् |
| जानाति, जानीते | ज्ञा अवबोधने | क्र्या | सकर्मकः | उ | अनिट् |
| जिघ्रति | घ्रा गन्धोपादाने | भ्वा | सकर्मकः | प | अनिट् |



| | | | | | |
|---|---|---|---|---|---|
| जिहीते | ओहाङ् गतौ | जु | अकर्मकः | आ | अनिट् |
| जिह्रेति | ह्री लज्जायाम् | जु | अकर्मकः | प | अनिट् |
| जीवति | जीव प्राणधारणे | भ्वा | अकर्मकः | प | सेट् |
| जुगुप्सते | गुप गोपने (स्वार्थेसन्) | भ्वा | सकर्मकः | आ | सेट् |
| जुषते | जुषी प्रीतिसेवनयोः | तु | अक-सक | आ | सेट् |
| जुहोति | हु दानादनयोः | जु | सकर्मकः | प | सेट् |
| जोषयति (ते) | जुष परितर्कणे | चु | सकर्मकः | उ | सेट् |
| ज्ञापयति | ज्ञा नियोगे | चु | सकर्मकः | उ | सेट् |
| ढौकते | ढौकृ गतौ | भ्वा | सकर्मकः | आ | सेट् |
| तक्षति | तक्षू तनूकरणे | भ्वा | सकर्मकः | प | सेट् |
| तक्ष्णोति | तक्षू (पक्षेश्नुः) | " | " | " | " |
| तनोति, तनुते | तनु विस्तारे | त | सकर्मकः | उ | सेट् |
| तपति | तप सन्तापे | भ्वा | अकर्मकः | प | अनिट् |
| तरति | तृ प्लवनतरणयोः | भ्वा | सकर्मकः | प | सेट् |
| तर्कयति | तर्क भाषायां वितर्के च | चु | सकर्मकः | उ | सेट् |
| तर्जति | तर्ज भर्त्सने | भ्वा | सकर्मकः | प | सेट् |
| ताडयति | तड आघाते | चु | सकर्मकः | उ | सेट् |
| ताम्यति | तमु कांक्षायाम् | दि | सकर्मकः | प | सेट् |
| तिम्यति | तिम आर्द्रीभावे | दि | अकर्मकः | प | सेट् |
| तिष्ठति | ष्ठा गतिनिवृत्तौ | भ्वा | अकर्मकः | प | अनिट् |
| तुलयति | तुल उन्माने | चु | सकर्मकः | उ | सेट् |
| तुष्यति | तुष प्रीतौ | दि | अकर्मकः | प | अनिट् |
| त्यजति | त्यज हानौ | भ्वा | सकर्मकः | प | अनिट् |
| त्रपते | त्रपूष् लज्जायाम् | भ्वा | अकर्मकः | आ | वेट् |

| | | | | | |
|---|---|---|---|---|---|
| त्रस्यति | त्रसी उद्वेगे | दि | अकर्मकः | प | सेट् |
| त्रायते | त्रैङ् पालने | भ्वा | सकर्मकः | आ | अनिट् |
| त्वङ्गति | त्वगि गतौ | भ्वा | सकर्मकः | प | सेट् |
| थुडति | थुड संवरणे | तु | सकर्मकः | प | सेट् |
| ददते | दद दाने | भ्वा | सकर्मकः | आ | सेट् |
| ददाति, दत्ते | डु दाञ् दाने | जु | सकर्मकः | उ | अनिट् |
| दयते | दय दानगतिरक्षणादिषु | भ्वा | अकर्मकः | आ | सेट् |
| दरिद्राति | दरिद्रा दुर्गतौ | अ | अकर्मकः | प | सेट् |
| दहति | दह भस्मीकरणे | भ्वा | सकर्मकः | प | अनिट् |
| दिशति | दिश अतिसर्जने | तु | सकर्मकः | उ | अनिट् |
| दीप्यते | दीपी दीप्तौ | दि | अकर्मकः | आ | सेट् |
| दीव्यति | दिवु क्रीडाविजिगीषादिषु | दि | अक सक | प | सेट् |
| दुःखयति(ते) | दुःख तत्क्रियायाम् | चु | सकर्मकः | उ | सेट् |
| दुनोति | टुदु उपतापे | स्वा | अकर्मकः | प | अनिट् |
| दूयते | दूङ् परितापे | दि | अकर्मकः | आ | सेट् |
| दृप्यति | दृप हर्षमोहनयोः | दि | अकर्मकः | प | वेट् |
| दधाति, धत्ते | धाञ् धारणपोषणयोः | जु | सकर्मकः | उ | अनिट् |
| (परि)देवयति | दिवु मर्दने | चु | सकर्मकः | उ | सेट् |
| दोग्धि | दुह प्रपूरणे | अ | सकर्मकः | उ | अनिट् |
| द्यति | दो अवखण्डने | दि | सकर्मकः | प | अनिट् |
| द्योतते | द्युत दीप्तौ | भ्वा | अकर्मकः | आ | सेट् |
| द्रवति | द्रु गतौ | भ्वा | अकर्मकः | प | अनिट् |
| द्रुह्यति | द्रुह जिघांसायाम् | दि | अकर्मकः | प | वेट् |
| द्वेष्टि, द्विष्टे | द्विष अप्रीतौ | अ | अकर्मकः | उ | अनिट् |



| | | | | | |
|---|---|---|---|---|---|
| धयति | धेट् पाने | भ्वा | सकर्मकः | प | अनिट् |
| धरति | धृञ् धारणे | भ्वा | सकर्मकः | उ | अनिट् |
| धर्षयति | धृष प्रहसने | चु | सकर्मकः | उ | सेट् |
| ध्वंसते | ध्वंसु अवस्रंसने | भ्वा | अकर्मकः | आ | सेट् |
| धावति (ते) | धावु गतिशुद्ध्योः | भ्वा | अक सक | उ | सेट् |
| धिनोति | धिवि प्रीणने | भ्वा | सकर्मकः | प | सेट् |
| धुवति | धू विधूनने | तु | सकर्मकः | प | सेट् |
| धुनोति, धुनुते | धुञ् कम्पने | स्वा | सकर्मकः | उ | वेट् |
| धूनोति, धूनुते | धूञ् कम्पने | स्वा | सकर्मकः | उ | वेट् |
| ध्यायति | ध्यै चिन्तायाम् | भ्वा | सकर्मकः | प | अनिट् |
| ध्वनति | ध्वन शब्दे | भ्वा | सकर्मकः | प | सेट् |
| ध्वनयति (ते) | ध्वन शब्दे | चु | सकर्मकः | उ | सेट् |
| नटति | नट नृत्तौ | भ्वा | अकर्मकः | प | सेट् |
| नदति | नद शब्दे | भ्वा | अकर्मकः | प | सेट् |
| नन्दति | टु नदि समृद्धौ | भ्वा | अकर्मकः | प | सेट् |
| नमति | णम प्रह्वत्वे शब्दे च | भ्वा | सकर्मकः | प | अनिट् |
| नयति (ते) | णीञ् प्रापणे | भ्वा | सकर्मकः | उ | अनिट् |
| नह्यति | णह बन्धने | दि | सकर्मकः | उ | अनिट् |
| नाथते | नाथृ याच्ञोपतापादिषु | तु | सकर्मकः | आ | सेट् |
| निन्दति | णिदि कुत्सायाम् | भ्वा | सकर्मकः | प | सेट् |
| (नि) बर्हयति | वर्ह हिंसायाम् | चु | सकर्मकः | उ | सेट् |
| नुदति | णुद प्रेरणे | तु | सकर्मकः | उ | अनिट् |
| नृत्यति | नृती गात्रविक्षेपे | दि | अकर्मकः | प | सेट् |
| नौति | णु स्तुतौ | अ | सकर्मकः | प | सेट् |

| | | | | | |
|---|---|---|---|---|---|
| पचति (ते) | डु पचष् पाके | भ्वा | सकर्मकः | उ | अनिट् |
| पणते | पण व्यवहारे | भ्वा | अकर्मकः | आ | सेट् |
| पतति | पत्लृ गतौ | भ्वा | अकर्मकः | प | सेट् |
| पद्यते | पद गतौ | दि | अकर्मकः | आ | अनिट् |
| पवते | पूङ् पवने | भ्वा | अकर्मकः | आ | सेट् |
| पश्यति | दृशिर् प्रेक्षणे | भ्वा | सकर्मकः | प | अनिट् |
| पाति | पा रक्षणे | अ | सकर्मकः | प | अनिट् |
| पारयति | पार कर्मसमाप्तौ | चु | सकर्मकः | प | सेट् |
| पालयति | पाल रक्षणे | चु | सकर्मकः | उ | सेट् |
| पिनष्टि | पिषॢ सञ्चूर्णने | भ्वा | सकर्मकः | प | अनिट् |
| पिबति | पा पाने | भ्वा | सकर्मकः | प | अनिट् |
| पीडयति | पीड अवगाहने | चु | सकर्मकः | उ | सेट् |
| पुनाति, पुनीते | पूञ् पवने | क्र्या | सकर्मकः | उ | सेट् |
| पुष्णाति | पुष पुष्टौ | क्र्या | सकर्मकः | प | सेट् |
| पुष्यति | पुष पुष्टौ | दि | अकर्मकः | प | अनिट् |
| पूजयति | पूज पूजायाम् | चु | सकर्मकः | उ | सेट् |
| पूर्यते | पूरी आप्यायने | दि | अकर्मकः | आ | सेट् |
| पृच्छति | प्रच्छ ज्ञीप्सायां | तु | अकर्मकः | प | अनिट् |
| पोषयति | पुष धारणे | चु | सकर्मकः | उ | सेट् |
| प्रीणयति(ते) | प्रीञ् तर्पणे | चु | सकर्मकः | उ | सेट् |
| प्रीणाति, प्रीणीते | प्रीञ् तर्पणे कान्तौ च | क्र्या | सकर्मकः | उ | अनिट् |
| प्रेंखति | इखि गतौ प्रपूर्वः | भ्वा | अकर्मकः | प | सेट् |
| प्रेपते | प्रेपृ गतौ | भ्वा | सकर्मकः | आ | सेट् |
| प्लवते | प्लुङ् गतौ | दि | सकर्मकः | प | सेट् |



| | | | | | |
|---|---|---|---|---|---|
| प्लुष्यति | प्लुष दाहे | दि | अकर्मकः | प | अनिट् |
| फलति | फल निष्पत्तौ | भ्वा | अकर्मकः | प | सेट् |
| बध्नाति | बध बन्धने | क्र्या | सकर्मकः | प | अनिट् |
| बाधते | बाधृ लोडने | भ्वा | सकर्मकः | आ | सेट् |
| बिभर्ति, बिभृते | डुभृञ् धारणपोषणयोः | जु | सकर्मकः | उ | अनिट् |
| बिभेति | भी भये | जु | अकर्मकः | प | अनिट् |
| बुध्यते | बुध अवगमने | दि | सकर्मकः | आ | अनिट् |
| ब्रवीति ब्रूते | ब्रूञ् व्यक्तायां वाचि | अ | सकर्मकः | उ | सेट् |
| भक्षयति(ते) | भक्ष अदने | चु | सकर्मकः | उ | सेट् |
| भजति (ते) | भज सेवायाम् | भ्वा | सकर्मकः | उ | सेट् |
| भणति | भण शब्दार्थे | भ्वा | सकर्मकः | प | सेट् |
| भवति | भू सत्तायाम् | भ्वा | अकर्मकः | प | सेट् |
| भाति | भा दीप्तौ | अ | अकर्मकः | प | अनिट् |
| भावयते | भू प्राप्तौ | चु | सकर्मकः | प | अनिट् |
| भाषते | भाष व्यक्तायां वाचि | भ्वा | सकर्मकः | आ | सेट् |
| भासते | भासृ दीप्तौ | भ्वा | असकर्मकः | आ | सेट् |
| भिनत्ति, भिन्ते | भिदिर् विदारणे | रु | सकर्मकः | उ | अनिट् |
| भुङ्क्ते, भुनक्ति | भुज पालनाभ्यवहारयोः | रु | सकर्मकः | उ | अनिट् |
| भूषयति(ते) | भूष अलङ्करणे | चु | सकर्मकः | उ | सेट् |
| भ्रमति | भ्रमु चलने | भ्वा | सकर्मकः | प | सेट् |
| भ्राजते | भ्राजृ दीप्तौ | भ्वा | अकर्मकः | आ | सेट् |
| भ्राम्यति | भ्रमु अनवस्थाने | दि | सकर्मकः | प | सेट् |
| मज्जति | टुमस्जो शुद्धौ | तु | सकर्मकः | प | अनिट् |
| मण्डयति(ते) | मडि भूषायां हर्षे च | चु | सकर्मकः | उ | सेट् |

| | | | | | |
|---|---|---|---|---|---|
| मथ्नाति | मन्थ विलोडने | क्र्या | सकर्मकः | प | सेट् |
| मनुते | मनु अवबोधने | त | सकर्मकः | आ | सेट् |
| मन्यते | मन ज्ञाने | दि | सकर्मकः | आ | अनिट् |
| महयति | मह पूजायाम् | चु | सकर्मकः | उ | सेट् |
| मार्गयति(ते) | मार्ग अन्वेषणे | चु | सकर्मकः | उ | सेट् |
| माति | माङ् माने | अ | सकर्मकः | प | अनिट् |
| माद्यति | मदी हर्षे | दि | सकर्मकः | प | सेट् |
| मानयति | मान पूजायाम् | चु | सकर्मकः | उ | सेट् |
| मायते | माङ् माने | दि | सकर्मकः | आ | अनिट् |
| मार्जयति | मृजू शौचालङ्कारयोः | चु | सकर्मकः | उ | वेट् |
| मार्ष्टि | मृजू शुद्धौ | अ | सकर्मकः | प | वेट् |
| मिनोति, मिनुते | डुमिञ् प्रक्षेपणे | स्वा | सकर्मकः | उ | अनिट् |
| मिमीते | माङ् माने शब्दे च | जु | सकर्मकः | आ | अनिट् |
| मिलति (ते) | मिल सङ्गमे | तु | सकर्मकः | उ | सेट् |
| म्रियते | मृङ् प्राणत्यागे | तु | अकर्मकः | आ | अनिट् |
| मीमांसते | मान पूजायाम् | भ्वा | सकर्मकः | आ | सेट् |
| मुञ्चति (ते) | मुच्लृ मोक्षणे | तु | सकर्मकः | उ | अनिट् |
| मुष्णाति | मुष स्तेये | क्र्या | सकर्मकः | प | सेट् |
| मुह्यति | मुह वैचित्त्ये | दि | अकर्मकः | प | वेट् |
| मूर्च्छति | मूर्छा स्नेहसमुच्छाययोः | भ्वा | अकर्मकः | प | सेट् |
| मृगयते | मृग अन्वेषणे | चु | सकर्मकः | आ | सेट् |
| मृशति | मृश आमर्शने | तु | सकर्मकः | प | अनिट् |
| मृष्यति | मृष तितिक्षायाम् | दि | सकर्मकः | उ | सेट् |
| मोदते | मुद हर्षे | भ्वा | अकर्मकः | आ | सेट् |



| | | | | | |
|---|---|---|---|---|---|
| म्लायति | म्लै हर्षक्षये | भ्वा | अकर्मकः | प | अनिट् |
| मृषति | मृश आमर्शने | तु | अकर्मकः | प | अनिट् |
| यतते | यती प्रयत्ने | भ्वा | अकर्मकः | आ | सेट् |
| यस्यति | यसु प्रयत्ने | दि | अकर्मकः | प | अनिट् |
| याति | या प्रापणे | अ | सकर्मकः | प | अनिट् |
| याचति(ते) | टुयाचृ याच्ञायां | भ्वा | सकर्मकः | उ | सेट् |
| युनक्ति, युङ्क्ते | युजिर् योगे | रु | सकर्मकः | उ | अनिट् |
| यौति | यु मिश्रणे अमिश्रणे च | अ | अकर्मकः | प | सेट् |
| युज्यते | युज समाधौ | दि | अकर्मकः | आ | अनिट् |
| युध्यते | युध सम्प्रहारे | दि | अकर्मकः | आ | अनिट् |
| रक्षति | रक्ष पालने | भ्वा | सकर्मकः | प | सेट् |
| रचयति (ते) | रच प्रतियत्ने | चु | सकर्मकः | उ | सेट् |
| रज्यते | रञ्ज रागे | दि | अकर्मकः | उ | अनिट् |
| रटति | रट परिभाषणे | भ्वा | सकर्मकः | प | सेट् |
| रणति | रण शब्दार्थे | भ्वा | अकर्मकः | प | सेट् |
| रमते | रमु क्रीडामाम् | भ्वा | अकर्मकः | आ | अनिट् |
| रसति | रस शब्दे | भ्वा | अकर्मकः | प | सेट् |
| रसयति | रस अस्वादनस्नेहयोः | चु | सकर्मकः | उ | सेट् |
| राजति (ते) | राजृ दीप्तौ | भ्वा | अकर्मकः | उ | सेट् |
| राध्यति | राध वृद्धौ | दि | अकर्मकः | प | अनिट् |
| रिङ्गति | रिगि गतौ | भ्वा | अकर्मकः | प | सेट् |
| रुणद्धि, रुन्धे, | रुधिर् आवरणे | रु | सकर्मकः | उ | अनिट् |
| रोचते | रूच दीप्तावभिप्रीतौ च | भ्वा | अकर्मकः | आ | सेट् |
| रोदिति | रुदिर् अश्रुविमोचने | अ | अकर्मकः | प | सेट् |

| | | | | | |
|---|---|---|---|---|---|
| रुष्यति | रुष रोषे | चु | अकर्मकः | प | सेट् |
| रौति | रु शब्दे | अ | अकर्मकः | प | सेट् |
| लक्षयति(ते) | लक्ष दर्शनाङ्कनयोः | चु | सकर्मकः | उ | सेट् |
| लगति | लगे सङ्गे | भ्वा | अकर्मकः | प | सेट् |
| लज्जते | ओलजी व्रीडायाम् | तु | अकर्मकः | आ | सेट् |
| लपति | लप व्यक्तायां वाचि | भ्वा | सकर्मकः | उ | सेट् |
| लभते | डुलभष् प्राप्तौ | भ्वा | सकर्मकः | आ | अनिट् |
| ललति | लल विलासे | भ्वा | अकर्मकः | प | सेट् |
| लषति | लष कान्तौ | भ्वा | अकर्मकः | प | सेट् |
| लसति | लस श्लेषणक्रीडनयोः | भ्वा | अकर्मकः | प | सेट् |
| लिखति | लिख अक्षरविन्यासे | तु | सकर्मकः | प | सेट् |
| लिम्पति (ते) | लिप उपदेहे | तु | सकर्मकः | उ | अनिट् |
| लीयते | लीङ् श्लेषणे | दि | अकर्मकः | आ | अनिट् |
| लुण्टति | लुटि स्तेये | भ्वा | सकर्मकः | प | सेट् |
| लुनाति, लुनीते | लूञ् छेदने | क्र्या | सकर्मकः | उ | सेट् |
| लेढि, लीढे | लिह आस्वादने | अ | सकर्मकः | उ | अनिट् |
| लोकते | लोकृ दर्शने | भ्वा | सकर्मकः | आ | सेट् |
| लोचयति | लोचृ दर्शने | चु | सकर्मकः | उ | सेट् |
| लोडति | लोडृ उन्मादे | भ्वा | अकर्मकः | प | सेट् |
| लोलति | लोल उन्मादे | भ्वा | अकर्मकः | प | सेट् |
| वक्ति | वच परिभाषणे | आ | सकर्मकः | प | अनिट् |
| वदति | वद व्यक्तायां वाचि | भ्वा | सकर्मकः | प | सेट् |
| वन्दते | वदि अभिवादनस्तुत्योः | भ्वा | सकर्मकः | आ | सेट् |
| वयति | वेञ् तन्तुसन्ताने | भ्वा | सकर्मकः | उ | अनिट् |



| | | | | | |
|---|---|---|---|---|---|
| वर्षति | वृषु सेचनहिंसासंक्लेशनेषु | भ्वा | सकर्मकः | प | सेट् |
| वलते | वल संवरणे सञ्चरणे च | भ्वा | अकर्मकः | आ | सेट् |
| वल्लते | वल्ल सञ्चरणे च | भ्वा | अकर्मकः | आ | सेट् |
| वल्गति | वल्ग गतौ | भ्वा | अकर्मकः | प | सेट् |
| वर्जयति (ते) | वृजी वर्जने | चु | सकर्मकः | उ | सेट् |
| वर्णयति | वर्ण प्रेरणे | चु | सकर्मकः | उ | सेट् |
| वर्तते | वृतु वर्तने | भ्वा | अकर्मकः | आ | सेट् |
| वर्धते | वृधु वृद्धौ | भ्वा | अकर्मकः | आ | सेट् |
| वष्टि | वश कान्तौ | अ | सकर्मकः | प | सेट् |
| वसति | वस निवासे | भ्वा | अकर्मकः | प | सेट् |
| वहति (ते) | वह प्रापणे | भ्वा | अकर्मकः | उ | अनिट् |
| वाञ्छति | वाछि इच्छायाम् | भ्वा | सकर्मकः | प | सेट् |
| वाति | वा गतिगन्धनयोः | अ | अकर्मकः | प | अनिट् |
| विद्यते | विद सत्तायाम् | दि | अकर्मकः | आ | अनिट् |
| विध्यति | व्यध ताडने | दि | सकर्मकः | प | अनिट् |
| विन्दति (ते) | विद्लृ लाभे | तु | सकर्मकः | उ | अनिट् |
| विविङ्क्ते | विजिर् पृथग्भावे | रु | सकर्मकः | उ | अनिट् |
| विशति | विश प्रवेशने | तु | सकर्मकः | प | अनिट् |
| वृणोति, वृणीते | वृञ् वरणे | स्वा | सकर्मकः | उ | सेट् |
| वृणीते, वृणाति | वृञ् वरणे | क्र्या | सकर्मकः | उ | सेट् |
| वेत्ति | विद ज्ञाने | अ | सकर्मकः | प | सेट् |
| वेष्टते | वेष्ट वेष्टने | भ्वा | सकर्मकः | आ | सेट् |
| व्यथते | व्यथ भयसञ्चलनयोः | भ्वा | अकर्मकः | आ | सेट् |
| व्यनक्ति | वि अञ्जू व्यक्तिमर्षणादौ | रु | सकर्मकः | प | वेट् |

| | | | | | |
|---|---|---|---|---|---|
| व्ययति | व्यय वित्तसमुत्सर्गे | चु | सकर्मकः | उ | सेट् |
| व्रजति | व्रज गतौ | भ्वा | सकर्मकः | प | सेट् |
| व्रीडयति | व्रीड चोदने लज्जायां च | दि | अकर्मकः | प | सेट् |
| शक्नोति | शक्लृ शक्तौ | स्वा | अकर्मकः | प | अनिट् |
| शङ्कते | शकि शङ्कायाम् | भ्वा | सकर्मकः | आ | सेट् |
| शपति | शप आक्रोशे | भ्वा | सकर्मकः | प | अनिट् |
| शंसति | शंसु स्तुतौ | भ्वा | सकर्मकः | प | सेट् |
| शाम्यति | शमु उपशमे | दि | अकर्मकः | प | सेट् |
| शास्ति | शासु अनुशिष्टौ | अ | सकर्मकः | प | सेट् |
| शिक्षते | शिक्ष विद्योपादाने | भ्वा | अकर्मकः | आ | सेट् |
| शीलयति | शील उपधारणे | चु | सकर्मकः | उ | सेट् |
| शुध्यति | शुध शौचे | दि | अकर्मकः | प | अनिट् |
| शुष्यति | शुष शोषणे | दि | अकर्मकः | प | अनिट् |
| शेते | शीङ् स्वप्ने | अ | सकर्मकः | आ | सेट् |
| शोचति | शुच शोके | भ्वा | अकर्मकः | प | सेट् |
| श्चोतति | श्चुतिर् क्षरणे | भ्वा | अकर्मकः | प | सेट् |
| शोभते | शुभ दीप्तौ | भ्वा | अकर्मकः | आ | सेट् |
| श्रयति (ते) | श्रिञ् सेवायाम् | भ्वा | सकर्मकः | उ | सेट् |
| शृणोति | श्रु श्रवणे | भ्वा | सकर्मकः | उ | अनिट् |
| (वि)श्राणयति | श्रण दाने | चु | सकर्मकः | उ | सेट् |
| श्राम्यति | श्रमु तपसि खेदे च | दि | अकर्मकः | प | सेट् |
| श्लाघते | श्लाघृ कत्थने | भ्वा | सकर्मकः | आ | सेट् |
| श्लिष्यति | श्लिष आलिङ्गने | दि | सकर्मकः | प | अनिट् |
| श्वसिति | श्वस प्राणने | अ | अकर्मकः | प | सेट् |



| | | | | | |
|---|---|---|---|---|---|
| सहते | षह मर्षणे | भ्वा | सकर्मकः | आ | सेट् |
| सर्पति | सृप्लृ गतौ | भ्वा | सकर्मकः | प | सेट् |
| सभाजयति | सभाज प्रीतिदर्शनयोः | चु | सकर्मकः | उ | सेट् |
| सरति | सृ गतौ | भ्वा | अकर्मकः | प | अनिट् |
| सवति | षु प्रसवैश्वर्ययोः | भ्वा | सकर्मकः | प | अनिट् |
| सिञ्चति | षिच क्षरणे | तु | सकर्मकः | प | अनिट् |
| सिध्यति | षिधु संसिद्धौ | दि | अकर्मकः | प | अनिट् |
| सीदति | षद्लृ विशरणगत्यवसादनेषु | भ्वा | अक सक | प | अनिट् |
| सुखयति | सुख तत्क्रियायां | चु | सकर्मकः | प | सेट् |
| सूते | षूञ् प्राणिगर्भविमोचने | अ | सकर्मकः | आ | वेट् |
| सूदते | षूद क्षरणे | भ्वा | सकर्मकः | आ | सेट् |
| सूदयति | षूद क्षरणे | चु | सकर्मकः | उ | सेट् |
| सृजति | सृज विसर्गे | तु | सकर्मकः | प | अनिट् |
| सेवते | सेवृ सेवने | भ्वा | सकर्मकः | आ | सेट् |
| सौति | षु प्रसवैश्वर्ययोः | अ | सकर्मकः | प | अनिट् |
| स्कन्दति | स्कदिर् गतिशोषणयोः | भ्वा | अकर्मकः | प | सेट् |
| स्तनयति | स्तन देवशब्दे | चु | अकर्मकः | उ | सेट् |
| स्तिम्यति | ष्टिम आर्द्रीभावे | दि | अकर्मकः | प | सेट् |
| स्तौति, स्तुते | ष्टुञ् स्तुतौ | अ | सकर्मकः | उ | अनिट् |
| स्थगति | ष्ठगे संवरणे | भ्वा | सकर्मकः | प | सेट् |
| स्नाति | ष्णा शौचे | अ | अकर्मकः | प | अनिट् |
| स्निह्यति | ष्णिह प्रीतौ | दि | अकर्मकः | प | वेट् |
| स्पर्धते | स्पर्ध संङ्घर्षे | भ्वा | अकर्मकः | आ | सेट् |
| स्पृशति | स्पृश संस्पर्शने | तु | सकर्मकः | उ | सेट् |

| | | | | | |
|---|---|---|---|---|---|
| स्पृहयति (ते) | स्पृह ईप्सायाम् | चु | सकर्मकः | उ | सेट् |
| स्फुटति | स्फुट विकसने | तु | अकर्मकः | प | सेट् |
| स्फुरति | स्फुर सञ्चलने | तु | अकर्मकः | प | सेट् |
| स्मरति | स्मृ चिन्तायाम् | भ्वा | सकर्मकः | प | अनिट् |
| स्रवति | स्रु गतौ | भ्वा | अकर्मकः | प | अनिट् |
| स्यन्दते | स्यन्दू प्रस्रवणे | भ्वा | अकर्मकः | आ | वेट् |
| स्रंसते | स्रंसु अवस्रंसने | भ्वा | अकर्मकः | आ | अनिट् |
| स्वनति | स्वन शब्दे | भ्वा | अकर्मकः | प | सेट् |
| स्वदते | स्वद आस्वादने | भ्वा | अकर्मकः | आ | सेट् |
| स्वादते | स्वाद आस्वादने | भ्वा | अकर्मकः | आ | सेट् |
| स्विद्यति | ञिष्विदा गात्रप्रक्षरणे | दि | अकर्मकः | प | अनिट् |
| हन्ति | हन हिंसागत्योः | अ | सकर्मकः | प | अनिट् |
| हरति | हृञ् हरणे | भ्वा | सकर्मकः | उ | अनिट् |
| हृप्यति | हृप तृप्तौ | दि | अकर्मकः | प | अनिट् |
| हसति | हसे हसने | भ्वा | अकर्मकः | प | सेट् |
| हिनस्ति | हिसि हिंसायाम् | त | सकर्मकः | प | सेट् |
| ह्वलति | ह्वल चलने | भ्वा | अकर्मकः | प | सेट् |
| ह्वयति | ह्वेञ् स्पर्धायां शब्दे च | भ्वा | सकर्मकः | उ | अनिट् |



## दशगणीयधातुसंख्याविवेचनी

| गणः | धातुपाठः | माधवीयधातुवृत्तिः | सिद्धान्तकौमुदी |
|---|---|---|---|
| भ्वादिः | १०१० | ९९५ | १०८० |
| अदादिः | ७२ | ७१ | ७७ |
| जुहोत्यादिः | २४ | २४ | २४ |
| दिवादिः | १४० | १३७ | १४५ |
| स्वादिः | ३४ | ३४ | ३८ |
| तुदादिः | १५७ | १५३ | १६७ |
| रुधादिः | २५ | २५ | २५ |
| तनादिः | १० | १० | १० |
| क्र्यादिः | ६१ | ६० | ७० |
| चुरादिः | ४१० | ३९० | ४६१ |
| | १९४३ | १८९९ | २०९७ |

# धात्वर्थमतभेददर्शिनी

**वैयाकरणाः**

**प्राचीनाः -** फलं व्यापारश्च सर्वधातूनामर्थः।

**नवीनाः -** फलावच्छिन्नव्यापारे व्यापारावच्छिन्नफले च धातोः पृथगेव शक्तिः। कर्त्राख्याते आद्यस्य कर्माख्याते च द्वितीयस्य बोधः। व्यापारश्च कृतिपर्यंतः।

**नैयायिकाः**

**प्राचीनाः -** व्यापारमात्रं धात्वर्थः।

**नवीनाः -** सकर्मकधातूनां फलावच्छिन्नव्यापारः अर्थः। फलं व्यापारश्चार्थ इति खण्डशक्तिपक्षः। कृतिर्न धात्वर्थः। अकर्मकधातूनां व्यापारमात्रमर्थः।

**मीमांसकाः**

**कौमारिलाः -** फलावच्छिन्नव्यापारो धात्वर्थः। कृतिर्न धात्वर्थेऽन्तर्भवति।

**मण्डनमिश्राः -** फलमात्रं धात्वर्थः।

इति वर्णयन्ति।

**धातोः अकर्मकत्वम् -** फलसमानाधिकरणव्यापारवाचित्वम्
फलानन्वितव्यापारवाचित्वं वा।

**धातोः सकर्मकत्वम् -** फलव्यधिकरणव्यापारवाचित्वम्
फलान्वितव्यापारवाचित्वं वा।

## संस्कृतवर्षे प्रकाशं निनीषिताः

१ वैशेषिकसूत्रवृत्तिः

२ लकारवादार्थः

३ जागदीशी पञ्चलक्षणी (कृष्णम्भट्टीयसहिता)

४ न्यायनिबन्धमाला

५ शताव्ययी

६ पाणिनीयशिक्षा (कर्णाटभाषा)

७ अभिनवकाव्यप्रयोगरत्नावली

८ प्रभातपाठः

९ न्यायप्रवेशः (कर्णाटभाषा)